॥ श्रीमद् वेदान्तदेशिक मङ्गलाशासनम् ॥
श्रीः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

श्रीमल्लक्ष्मणयोगीन्द्र सिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥

सर्वतन्त्रस्वतन्त्राय सिंहाय कविवादिनाम् ।
वेदान्ताचार्यवर्याय वेङ्कटेशाय मङ्गलम् ॥ १॥

नभस्यमासि श्रोणायामवतीर्णाय सूरये ।
विश्वामित्रान्वयायास्तु वेङ्कटेशाय मङ्गलम् ॥ २॥

पिता यस्यानन्तसूरिः पुण्डरीकाक्षयज्वनः ।
पौत्रो यस्तनयस्तोतारम्बायास्तस्य मङ्गलम् ॥ ३॥ var यस्तनयस्तोताद्र्यम्बायाः
वेङ्कटेशावतारोऽयं तद्घण्टांशोऽथवा भवेत् ।
यतीन्द्रांशोऽथवेत्येवं वितर्क्यायास्तु मङ्गलम् ॥ ४॥

श्रीभाष्यकारः पन्थानमात्मना दर्शितं पुनः ।
उद्धर्तुमागतो नूनमित्युक्तायास्तु मङ्गरम् ॥ ५॥

यो बाल्ये वरदार्यस्य प्राचार्यस्य परां दयाम् ।
अवाप्य वृद्धिं गमितः तस्मै योग्याय मङ्गलम् ॥ ६॥

रामानुजार्यादात्रेयान्मातुलात् सकलाः कलाः ।
अवाप विंशत्यब्दे यस्तस्मै प्राज्ञाय मङ्गलम् ॥ ७॥

श्रुतप्रकाशिका भूमौ येनादौ परिरक्षिता ।
प्रवर्तिता च पात्रेषु तस्मै श्रेष्ठाय मङ्गलम् ॥ ८॥

सांस्क्रतीभिद्राविडीभिः बह्वीभिः कृतिभिजनान् ।
यस्समुज्जीवयामास तस्मै सेव्याय मङ्गलम् ॥ ९॥

यः ख्यातिलाभपूजासु विमुखो वैष्णवे जने ।
क्रयणीयदशां प्राप्तः तस्मै भव्याय मङ्गलम् ॥ १०॥

यस्मादेव मया सर्व शास्त्रमग्राहि नान्यतः ।
तस्मै वेङ्कटनाथाय मम नाथाय मङ्गलम् ॥ ११॥

पित्रे ब्रह्मोपदेष्ट्रे मे गुरवे दैवताय च ।
प्राप्याय प्रापकायास्तु वेङ्कटेशाय मङ्गलम् ॥ १२॥

यः कृतं वरदार्येण वेदान्ताचार्य मङ्गलम् ।
आशास्तेऽनुदिनं सोऽपि भवेन्मङ्गल भाजनम् ॥ १३॥

इति श्री कुमार वरदाचार्येण कृतं
श्रीमद् वेदान्तदेशिकमङ्गलाशासनम् ॥